भार्गवेणापि राजेन्द्र जनकस्य निवेशने। कथैषा कथिता पुण्या नारदाय महात्मने।
नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने। कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्म्मणा।
देवराजेन च पुरा कथितैषा कथा शुभा। समस्तेभ्यः प्रशस्तेभ्यो विप्रेभ्यो वसुधाधिप।
यदा च मम रामेण युद्धमासीत् सुदारुणं। वसुभिश्च तदा राजन् कथेयं कथिता मम। १३९४०
पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव। कथेयं कथिता पुण्या धर्म्या धर्म्मभृताम्बर।
तदयं परमो धर्म्मो यन्मां पृच्छसि भारत। आसीद्वीरो ह्यनाकाङ्क्षी धर्म्मार्थकरणे नृप।
स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशितात्मकृत्यः। यमनियमसहो वनान्तरं परिगणितोञ्छशिलाशनः प्रविष्टः॥
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने सप्तषष्ठ्यधिकत्रिशततोऽध्यायः॥ ३६७॥
समाप्तञ्चेदं शान्तिपर्व्व॥
यद्यत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनातिरिक्तत्वं दृष्टं भवेत्तल्लिपिकरप्रमादेन बोध्यमिति।

## ॥ श्रीमहाभारतीयतृतीयखण्डान्तर्गतकर्णपर्व्वसूचीपत्रं ॥



---

---